तृतीयः पाठः

# परोपकाराय सतां विभूतयः

संस्कृत साहित्य में जातक कथाओं का अपना विशेष महत्त्व है। ये कथाएँ मूलतः पालि में हैं जिनकी संख्या 547 है। बोधिसत्त्व के कर्म दिव्य और अद्भुत हैं। उनका जीवन अलौकिक और आदर्श है। इसी से प्रेरणा लेकर आर्यशूर ने **जातकमाला** ग्रन्थ की रचना की। यह ग्रन्थ गद्य–पद्य मिश्रित संस्कृत में है। प्रस्तुत पाठ इसी ग्रन्थ के पन्द्रहवें जातक **'मत्स्यजातकम्'** का संक्षेप है।

इसमें बताया गया है कि सत्य–तपोबल के आधार पर किस प्रकार मत्स्याधिपति के रूप में बोधिसत्त्व अपने साथी मत्स्यों की प्राण रक्षा करने में समर्थ होते हैं। वस्तुतः सत्त्वगुण से परिपूर्ण आचरण देवताओं को भी वश में कर सकता है।

**बोधिसत्त्वः किल कस्मिंश्चित् नातिमहति कमलकुवलयादि-विभूषितसलिले हंसचक्रवाकादिशोभिते तीरान्ततरुकुसुमावकीर्णे सरसि मत्स्याधिपतिः बभूव। बहुषु जन्मान्तरेषु परोपकाराभ्यासवशात् तत्रस्थः अपि परहितसुखसाधने व्यापृतः अभवत्। इष्टानामिव च स्वेषाम् अपत्यानाम् उपरि सौहार्दत्वाद् महासत्त्वः तेषां मीनानां दानप्रिय-वचनादिक्रमैः परमनुग्रहं चकार।**

**अथ कदाचित् सत्त्वानां भाग्यवैकल्यात् प्रमादाच्च सम्यग् देवो न ववर्ष। वृष्टेः अभावे तत् सरः कदम्बकुसुमगौरेण नवसलिलेन यथापूर्वं न परिपूर्णम् जातम्। क्रमेण च उपगते निदाघकाले दिनकरकिरणैः अभितप्तया धरण्या, ज्वालानुगतेनेव मारुतेन पिपासावशादिव प्रत्यहम् आपीयमानं तत् सरः लघुपल्वलमिवाभवत्। तत्रस्थिताः मीनाश्च जलाभावात् मृतप्रायाः इव संजाताः। सलिलतीरवासिनः पक्षिणः वायसगणाः च यावत् तान् मत्स्यान् भक्षयितुं**



चिन्तयन्ति स्म तावद् विषाददैन्यवशगं मीनकुलमवेक्ष्य बोधिसत्त्वः करुणायमानः चिन्तामापेदे। कष्टा बत इयम् आपद् आपतिता मीनानाम्।

प्रत्यहं क्षीयते तोयं स्पर्धमानमिवायुषा।
अद्यापि च चिरेणैव लक्ष्यते जलदागमः॥
अपयानक्रमो नास्ति नेताप्यन्यत्र को भवेत्।
अस्मद्व्यसनसङ्कृष्टाः समायान्ति च नो द्विषः॥

तत्किमत्र प्राप्तकालं स्यादिति विमृशन् स महात्मा स्वकीय-सत्यतपोबलमेव तेषां रक्षणोपायम् अमन्यत। करुणया समापीड्यमानहृदयो दीर्घं निःश्वस्य नभः समुल्लोकयन् उवाच –

स्मरामि न प्राणिवधं यथाहं सञ्चिन्त्य कृच्छ्रे परमेऽपि कर्तुम्।
अनेन सत्येन सरांसि तोयैरापूरयन् वर्षतु देवराजः॥



अथ तस्य महात्मनः पुण्योपचयात् सत्याधिष्ठानबलात् च समन्ततः तोयपरिपूर्णाः गम्भीरमधुरनिर्घोषा अकाला अपि कालमेघाः विद्युल्लताऽलङ्कृताः प्रादुरभवन्। बोधिसत्त्वः समन्ततोऽभिप्रसृतैः सलिलप्रवाहैरापूर्यमाणे सरसि, धारानिपातसमकालेन विद्रुतवायसाद्ये पक्षिगणे, लब्धजीविताशे च प्रमुदिते मीनगणे प्रीत्याभिसार्यमाणहृदयो वर्षानिवृत्तिसाशङ्कः पुनः पुनः पर्जन्यमाबभाषे –

उद्गर्ज पर्जन्य गभीरधीरं प्रमोदमुद्भासय वायसानाम्।
रत्नायमानानि पयांसि वर्षन् संसक्तविद्युज्ज्वलितद्युतीनि॥

तदुपश्रुत्य देवानाम् इन्द्रः शक्रः परमविस्मितमनाः साक्षात् अभिगम्यैनम् अभिसंराधयन् उवाच–

तवैव खल्वेष महानुभाव ! मत्स्येन्द्र ! सत्यातिशयप्रभावः।
आवर्जिता यत्कलशा इवेमे क्षरन्ति रम्यस्तनिताः पयोदाः॥

इत्येवं प्रियवचनैः संराध्य तत्रैवान्तर्दधे। तच्च सरः तोयसमृद्धिमवाप। तदेवं शीलवताम् इह एव कल्याणाः अभिप्रायाः वृद्धिम् आप्नुवन्ति प्रागेव परत्र च। अतः शीलविशुद्धौ प्रयतितव्यम्।

## शब्दार्थाः टिप्पण्यश्च

| | | |
|---|---|---|
| **कुवलयम्** | – | नीलकमलम्, नीला कमल। |
| **चक्रवाकादिशोभिते** | – | चक्रवाक (चकवा) आदि पक्षी गणों से सुशोभित। |
| **तत्रस्थः अपि** | – | वहाँ, उस जन्म में स्थित होते हुए भी। |
| **भाग्यवैकल्यात्** | – | भाग्यस्य वैकल्यम् तस्मात्, भाग्य के अनुकूल न होने पर। |
| **आपीयमानम्** | – | आ समन्तात् पीयमानम् पा कर्मवाच्य, शानच्, चारों ओर से पीया जाता हुआ। |
| **लघुपल्वलमिव** | – | छोटे तालाब के समान। |
| **विषाददैन्यवशगम्** | – | विषादः च दैन्यं च विषाददैन्ये, तयोः वशं गतम्, विषाद और दैन्य के वशीभूत। |
| **अवेक्ष्य** | – | अव + ईक्ष् + क्त्वा >ल्यप्, देखकर। |
| **आपेदे** | – | प्राप्त हुआ। |
| **बत** | – | शोक को व्यक्त करने वाला अव्यय पद, हाय! |
| **स्पर्धमानम्** | – | स्पर्धा कुर्वाणम् (स्पर्ध् + शानच्), स्पर्धा करता हुआ। |
| **जलदागमः** | – | जलं ददाति इति जलदः तेषाम् आगमः, बादलों का आगमन। |
| **चिरेण** | – | दूर ही (देर से) |
| **अपयानक्रमः** | – | अपयानस्य क्रमः दूरगमनस्य मार्गः, बाहर जाने का रास्ता। |
| **द्विषः** | – | शत्रवः, शत्रुगण। |
| **प्राप्तकालम्** | – | प्राप्तः कालः यस्य तत्, समयोचित। |
| **विमृशन्** | – | वि मृश्, शतृ पुं, प्र. ए.व., विचार करते हुए। |
| **नभः** | – | आकाशम्, आकाश को। |
| **आपूरयन्** | – | आ पृ-णिच्, शतृ, पु. प्र. ए.व., पूरते हुए, भरते हुए। |
| **सत्याधिष्ठानबलात्** | – | सत्य पर दृढ़ रहने की शक्ति से। |
| **अकालाः** | – | न कालः येषाम् ते, असमय प्रकट होने वाले। |
| **कालमेघाः** | – | प्रलय काल के समान मेघ। |
| **विद्रुते** | – | वि द्रु क्त सप्तमी, ए.व., भाग जाने पर। |
| **अभिसार्यमाणहृदयः** | – | अभिसार्यमाणं प्रसाद्यमानं हृदयं यस्य सः, प्रसन्न किये जाते हुए हृदय वाला। |

**वर्षानिवृत्तिसाशङ्कः** – वर्षाणां निवृत्तिम् अधिकृत्य आशङ्कया सह विद्यमानः, वर्षा की समाप्ति की आशंका वाला।

**पर्जन्यम्** – मेघम्, बादल को।

**संसक्तविद्युज्ज्वलितद्युतीनि** – संसक्तायाः विद्युतः ज्वलितेन द्युतिः येषां तानि, लगातार चमकती हुई बिजली के प्रकाश से युक्त।

**रत्नायमानानि पयांसि** – रत्नों के समान दिखाई पड़ने वाले जल।

**उद्वासय** – उद् वस् णिच् लोट् मध्यम पु., ए.व., समाप्त कीजिए।

**उपश्रुत्य** – उप श्रु + क्त्वा >ल्यप्, सुनकर।

**अभिसंराधयन्** – अभि सम् राध् शतृ पुं., ए.व., स्तुति करते हुए।

**सत्यातिशयप्रभावः** – सत्यस्य अतिशयः तस्य प्रभावः, सत्य का अलौकिक प्रभाव।

**आवर्जिताः कलशा इव** – पलटाये गये घड़ों के समान।

**अन्तर्दधे** – अन्तः धा, लिट्, प्र. पु., ए.व., अन्तर्धान हो गया।

**अभिप्रायाः** – मनोरथ।

**इह** – अस्मिन् लोके, इस लोक में।

**परत्र** – परलोके, परलोक में।

## अभ्यासः

**1. संस्कृतभाषया उत्तरत**

(क) जातकमालायाः लेखकः कः?
(ख) कथायां वर्णिते जन्मनि बोधिसत्त्वः कः बभूव?
(ग) महासत्त्वः मीनानां कैः परमनुग्रहम् अकरोत्?
(घ) सरः लघुपल्वलमिव कथमभवत्?
(ङ) बोधिसत्त्वः किमर्थं चिन्तामकरोत्?
(च) तोयं प्रतिदिनं केन स्पर्धमानं क्षीयते स्म?
(छ) आकाशे अकाला अपि के प्रादुरभवन्?
(ज) कया आशङ्कया बोधिसत्त्वः पुनः पुनः पर्जन्यं प्रार्थितवान्?
(झ) शक्रः केषां राजा आसीत्?
(ञ) अस्माभिः कुत्र प्रयतितव्यम्?

**2. रिक्तस्थानानि पूरयत**

(क) बोधिसत्त्वः परहितसुखसाधने ........................ अभवत्।

(ख) तत्रस्थिताः मीनाः जलाभावात् ........................ इव संजाताः।

(ग) विषाददैन्यवशगं मीनकुलमवेक्ष्य बोधिसत्त्वः ........................ आपेदे।

(घ) स महात्मा स्वकीयसत्यतपोबलमेव तेषां ........................ अमन्यत।

(ङ) तत् ........................ तोयसमृद्धिमवाप।

**3. सप्रसङ्गं व्याख्या कार्या**

(क) बहुषु जन्मान्तरेषु परोपकार-अभ्यासवशात् तत्रस्थः अपि परहितसुखसाधने व्यापृतः अभवत्।

(ख) अस्मद्व्यसनसङ्कृष्टाः समायान्ति नो द्विषः।

(ग) शीलवताम् इह एव कल्याणाः अभिप्रायाः वृद्धिम् आप्नुवन्ति।

**4. अधोलिखितशब्दान् ल्यबन्तेषु शतृप्रत्ययान्तेषु शानच्प्रत्ययान्तेषु च विभज्य लिखत**

आपीयमानम्, अवेक्ष्य, स्पर्धमानम्, समापीड्यमानम्, निःश्वस्य, रत्नायमानानि, अभिगम्य, संराधयन्, विमृशन्, समुल्लोकयन्।

**5. विशेषणानि विशेष्यैः सह योजयत**

| | |
|---|---|
| (क) सरसि | इष्टानाम् |
| (ख) धरण्या | कदम्बकुसुमगौरेण |
| (ग) अपत्यानाम् | हंसचक्रवाकादिशोभिते |
| (घ) नवसलिलेन | अभितप्तया |
| (ङ) पक्षिणः | ज्वालानुगतेन |
| (च) बोधिसत्त्वः | तत्रस्थाः |
| (छ) मीनः | सलिलतीरवासिनः |
| (ज) मारुतेन | करुणायमानः |

**6. अधोलिखितपदानि संस्कृतवाक्येषु प्रयुङ्ध्वम्**

कस्मिंश्चित्, भाग्यवैकल्यात्, आपीयमानम्, लक्ष्यते, विमृशन्, अभिगम्य, प्रयतितव्यम्।

**7. पर्यायवाचकं चिनुत**

मीनः, पक्षी, प्रत्यहम्, आपद्, पर्जन्यः।

8. **अधोलिखितवाक्येषु उपमानानि योजयत**

(क) ..................... इव मीनानां परमनुग्रहं चकार।

(ख) ..................... इव तोयं प्रत्यहं क्षीयते।

(ग) ..................... इव इमे पयोदाः क्षरन्ति।

(घ) ..................... इव नवसलिलेन सरः परिपूर्णं न जातम्।

(ङ) सरः ग्रीष्मकाले ..................... इव सञ्जातम्।

## योग्यताविस्तारः

**अधोलिखितानां सूक्तीनाम् अध्ययनं कृत्वा प्रस्तुतपाठेन भावसाम्यम् अवधत्त**

**(1) पिबन्ति नद्यः स्वयमेव नाम्भः**
**स्वयं न खादन्ति फलन्ति वृक्षाः।**
**धाराधरो वर्षति नात्महेतोः**
**परोपकाराय सतां विभूतयः।**

**(2) अष्टादशपुराणेषु व्यासस्य वचनद्वयम्।**
**परोपकारः पुण्याय पापाय परपीडनम्॥**

**(3) श्रूयतां धर्मसर्वस्वं श्रुत्वा चैवावधार्यताम्।**
**आत्मनः प्रतिकूलानि परेषां न समाचरेत्॥**

**(4) छायामन्यस्य कुर्वन्ति तिष्ठन्ति स्वयमातपे।**
**फलान्यपि परार्थाय वृक्षाः सत्पुरुषा इव॥**

**(5) ऊर्ध्वबाहुर्विरौम्येष न च कश्चिच्छृणोति मे।**
**परोपकारः पुण्याय पापाय परपीडनम्॥**

**(6) भवन्ति नम्रास्तरवः फलोद्गमैः**
**नवाम्बुभिर्दूरविलम्बिनो घनाः।**
**अनुद्धताः सत्पुरुषाः समृद्धिभिः**
**स्वभाव एवैष परोपकारिणाम्॥**

**(7) प्रदानं प्रच्छन्नं गृहमुपगते सम्भ्रमविधिः,**
**प्रियं कृत्वा मौनं सदसि कथनं चाप्युपकृतेः।**
**अनुत्सेको लक्ष्म्यामनभिभवगन्धाः परकथाः**
**सतां केनोद्दिष्टं विषममसिधाराव्रतमिदम्॥**